त्र किं कार्यमित्यपेक्षायामाह मनुः

कुर्याद्घृतपशुंसंगे कुर्यात्पिष्टपशुंस्तथा
नत्वेवतु वृथा हन्तुं पशुमिच्छेत्कदाचन ३०

अत्र मनुनोभयकार्यमभिप्रेत्य तन्त्रेणेयं स्मृतिः पठिता तथाहि आसक्तिश्चेद्घृतपशुं स्तथा पिष्टपशुं कृत्वा खादयेत् तथा च यज्ञादिप्रसंगेषु यत्र प्रत्यक्षपशुः प्रदेयत्वेनोक्तस्तत्र पिष्टपशुं कुर्यात् अत एवात्र मनुना कुर्यादिपदं संग इति पदं च निर्दिष्टम् अन्यथासक्तिश्चेत्पिष्टपशुं कृत्वा खादयेदिति स्पष्टं ब्रुयात् अत एव यवमयं मेषं मेषीं च कृत्वा वरुणदेवतामुद्दिश्याग्नौ निर्वपन्ति नायं पिष्टपशुः प्रत्यक्षपशोरभावे तत्प्रतिनिधिरिति वाच्यं वेदे पिष्टपशोरेव प्रत्यक्षपशुत्वप्रतिपादनात् तथाहि शतपथब्राह्मणे

हरिः ॐ वैश्वदेवेन वै प्रजापतिः। प्रजाः ससृजे ता अस्य प्रजाः सृष्टा वरुणस्य यवान्जक्षुर्वरुण्यो ह वाऽअग्रे यवस्तद्यन्नेव वरुणस्य यवान्प्रादंस्तस्माद्वरुणप्रघासा नाम ॥१॥ ता वरुणो जग्राह। ता वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च प्राणोदानौ हैवाभ्यो नाप-

चक्रमनुरथान्याः सर्वा देवता अपचक्रमुस्तयो-
र्हैवास्य हतोः प्रजा न पराबभूवुः ॥२॥ ता
एतेन हविषा प्रजापतिरभिषज्यत् । तद्याश्चैवा-
स्य प्रजा जाता आसन्याश्चाजातास्ता उभयीर्वरु
णपाशात्प्रामुञ्चत्ता अस्यानमीवा अकिल्वि-
षाः प्रजाः प्राजायत ॥३॥ अथ यदेष एतैश्च
तुर्थे मासि यजते । तन्नाह न्वेवैतस्य तथा प्रजा
वरुणो गृह्णातीति देवा अकुर्वन्निति न्वेवैष एत-
त्करोति याश्च न्वेवास्य प्रजा जाता याश्चाजा-
तास्ता उभयीर्वरुणपाशात्प्रमुञ्चति ता अस्या-
नमीवा अकिल्विषाः प्रजाः प्रजायते तस्माद्वाऽ
एष एतैश्चतुर्थे मासि यजते ॥४॥ तद्वै द्वे वेदी
द्वावग्नी भवतः । तद्यद्द्वे वेदी द्वावग्नी भवतस्तदुभ-
यत एवैतद्वरुणपाशात्प्रजाःप्रमुञ्चतीतश्चोर्ध्वा इ
तश्चावाचीस्तस्माद्द्वे वेदी द्वावग्नी भवतः ॥५॥
स उत्तरस्यामेव वेदौ । उत्तरवेदिमुपाकिरति न
दक्षिणस्यांक्षत्रं वै वरुणो विशो मरुतः क्षत्रमेवै-
तद्विश उत्तरं करोति तस्मादुपर्यासीनं क्षत्रीय-

मधस्तादिमाः प्रजा उपासते तस्मादुत्तरस्यामेव वेदाऽउत्तरवेदिमुपाकिरति नदक्षिणस्याम् ।।६।। अथैतान्येव पञ्च हवींषि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजतैतैरुभयतो वरुण पाशात्प्रजाः प्रामुञ्चादितश्चोर्ध्वा इतश्चावाचीस्त स्माद्वाऽएतानि पञ्च हविंषि भवन्ति ।।७।। अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । प्राणोदानौ वाऽइन्द्राग्नी तद्यथा पुण्यं चक्रुषे पुण्यं कुर्यादेवं तत्तयोर्हैवास्य हेतोः प्रजा न पराबभूवुस्तत्प्राणोदानाभ्यामेवैतत्प्रजा ।भिषज्यति प्राणोदानौ प्रजासु दधाति तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ।।८।। उभयत्रपयस्ये भवतः । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भुतास्तद्यत एव सम्भुतायतः सम्भवन्ति तत एवैतदुभयतो वरुणपाशात्प्रजाःप्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मादुभयत्र पयस्ये भवतः ।।९।। वारुण्युत्तरा भवति । वरुणो ह वाऽअस्यप्रजा अगृह्णात्तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चाति मा

रुती दक्षिणा जामितायै न्वेव मारुती भवति जा-
मि ह कुर्याद्यदुभे वारुण्यौ स्यातामतो ह वाऽ
अस्य दक्षिणतो मरुतः प्रजा अजिघांसंस्तां-
नेतेन भागेनाशमयंस्तस्मान्मारुती दक्षिणा ॥१०॥
तयोरुभयोरेव करीराण्यावपति । कं वै प्रजाप
तिः प्रजाभ्यः करीरैरकुरुत कमेवैष एतत्प्रजाभ्यः
कुरुते ॥११॥ तयोरुभयोरेव शमीपलाशान्या-
वपति । शं वै प्रजापतिः प्रजाभ्यः शमीपलाशै-
रकुरुत शमेवैष एतत्प्रजाभ्य कुरुते ॥१२॥
अथ काय एककपालः पुरोडाशो भवति । कं
वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडा
शेनाकुरुत कमेवैष एतत्प्रजाभ्यः कायेनैकक-
पालेन पुरोडाशेन कुरुते तस्मात्काय एककपा
लः पुरोडाशो भवति ॥१३॥ अथ पूर्वेद्युः ।
अन्वाहार्यपचनेऽनुषानिव यवान्कृत्वा तानीषदिवो
पतप्य तेषा करम्भपात्राणि कुर्वन्ति यावन्तोगृह्या
स्युस्तावन्त्येकेनातिरिक्तानि ॥१४॥ तत्रापि मेषं
च मेषीं च कुर्वन्ति । तयोर्मेषे च मेष्यां च य-

यद्यनैडकीरूर्णा विन्देत्ताः प्रणिह्य निश्लेषयेद्यद्युऽ अनैडकीर्न विन्देदथोऽअपि कुशोर्णा एव स्युः ॥१५॥ तद्यन्मेषश्च मेषी च भवतः । एष वै-प्रत्यक्षं वरुणस्य पशुर्यन्मेषस्तत्प्रत्यक्षं वरुणपा-शात्प्रजाः प्रमुञ्चति यवमयौ भवतो यवान्हि जक्षुषीर्वरुणोऽगृह्णान्मिथुनौ भवतो मिथुनादेवै-तद्वरुण पाशात्प्रजाः प्रमुञ्चाति ॥१६॥ स उ त्तरस्यामेव पयस्यायां मेषमिवदधाति । दक्षिणस्यां मेषमेवामिवही मिथुनं क्लृप्तमुत्तरतो हि स्त्री पु-मांसमुपशेते ॥१७॥

एवंयत्रयत्रकर्मणिप्रत्यक्षपशुःप्रदेयत्वेनोक्तस्तत्रतत्र पिष्टपशुरेवाभिप्रेत्तोनतुसाक्षात्पशुःसाक्षात्पशवोहिहनन कालेशोचन्तितस्मात्तेयज्ञाहानभवन्तिअतएवसृष्ट्यारंभका लेन्नंसिसृक्षुणाप्रजापतिनादौस्वमनसःसकाशात्पुरुषोनि र्मितश्चचक्षुषोऽश्वःप्राणाद्गौःश्रोत्रादविर्वाचोजश्चानिर्मि तः एवंसृष्टैतेपशवोनिर्वपनकालेयदाअशोचन्तदेत्थंतेषां शोकोपहतः लोकेषुपुरुषरूपोद्विपादपशुर्नहिंस्यस्तथाश्व रूपश्चतुष्पादपशुर्नहिंस्यः एवंगौरविरजश्चनहन्तव्याःकिंचै

तेपशवउत्क्रान्तमेधाअमेध्याअयज्ञिया:सन्तितस्मादेते षांमांसंनाशितव्यमित्याहशतपथब्राह्मणे.

हरि: ॐ प्रजापतिर्वाऽइदमग्रऽआसीदेक एव सोऽका मयतान्नं सृजेय प्रजायेयेति स प्राणेभ्य एवाधि पशून्निरमिमीत मनस: पुरुषं चक्षुषोऽश्वं प्राणा द्गां श्रोत्रादविं वाचोऽजं तद्यदेनान्प्राणेभ्योऽधि निरमिमीत तस्मादाहु: प्राणा: पशव इति मनो वै प्राणानां प्रथमं तद्यन्मनस: पुरुषं निरमिमीत तस्मादाहु: पुरुष: प्रथम: पशूनां वीर्यवत्तमइति मनो वै सर्वे प्राणा मनसि हि सर्वे प्राणा: प्रति ष्ठितास्तद्यन्मनस: पुरुषं निरमिमीत तस्मादाहु: पुरुष: सर्वे पशव इति पुरुषस्य ह्येवैते सर्वे भव न्ति ।।६।। तदेतदन्नं सृष्ट्वा

हरि: ॐ अथोत्सर्गैरुपतिष्ठत । एतद्वै यत्रैतान्प्रजा पति: पशूनालिप्सत तऽआलिप्स्यमाना अशोचं स्तेषामेतैरुत्सर्गै: शुचं पाप्मानमपाहंस्तथैवैषामय मेतदेतैरुत्सर्गै: शुचं पाप्मानमपहन्ति ।।२८।। तद्धैके । यं-यमेव पशुमुपदधाति तस्य तस्य शु

चमुत्सृजन्ति नेच्छुचं पाप्मानमभ्युपदधामहाऽइति ते ह ते शुचं पाप्मानमभ्युपदधति यां हिपूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधति ॥२९॥ विपरिक्राममु हैकऽउपतिष्ठन्ते ।·ऊर्ध्वां शुचमुत्सृजाम इति ते ह ते शुचं पाप्मानमनूद्यन्त्यूर्ध्वां ह्येतेन कर्मणैत्यूर्ध्वामु शुचमुत्सृजन्ति ।३०। बाह्येनैवाग्निमुत्सृजेत् । इमे वै लोका एषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद्बहिर्धा शुचं दधात्युदङ् तिष्ठन्नेतस्यां ह दिश्येते पशवस्तद्यत्रैते पशवस्तदेवैष्वेतच्छुचं दधाति ॥३१॥ पुरुषस्य प्रथममुत्सृजति । तं हि प्रथममुपदधातीमं मा हिंसीर्द्विपादं पशुमिति द्विपाद्वाएष पशुर्यत्पुरुषस्तं मा हिंसीरित्येतत्सहस्राक्षो मेधाय चीयमान इति हिरण्यशकलैर्वाऽएष सहस्राक्षो मेधायेत्यन्नायेत्येतन्मयुं पशुं मेधमग्ने जुषस्वेति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येतत्तेन चिन्वानस्तन्वो निषीदेत्यात्मा वै तनूस्तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतन्मयुं ते

शुगृछनु यंद्विष्मस्तं ते शुगृछत्विति तन्मयौ च
शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥२२॥ अथा
श्वस्य । इमं मा हिंसीरेकशफं पशुमित्येकशफो
वाऽएष पशुर्यदश्वस्तं माहिंसीरित्येतत्कनिक्रदं
वाजिनं वाजिनेष्वित्ति कनिक्रदो वाऽएष वाज्यु वा
जिनेषु गौरमारण्यमनु ते दिशामीति तदस्मै गौ
रमारण्यमनुदिशाति तेन चिन्वानस्तन्वो निषीदेति
तेन चिन्वानआत्मानं संस्कुरुष्वेत्येतद्गौरं ते शुगृ
छतु यं द्विष्मस्तं ते शुगृछत्विति तद्गौरे च शुचं
दधाति यं च द्वेष्टि तस्मिंश्च ॥२३॥ अथगोः ।
इमं साहस्रं शतधारमुत्समिति साहस्रो वाऽएष
शतधार उत्सो यद्गौर्व्यच्यमानं सरिरस्य मध्य
ऽइतिमे वै लोकाः सरिरमुपजीव्यमानमेषु लोके
ष्वित्येतद्घृतं दुहानामदितिं जनायेति घृतं वाऽए
षादितिर्जनाय दुहेऽग्ने मा हिंसीःपरमे व्योमन्नि
तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिं
सीरित्येतद्गवयमारण्यमनु ते दिशामीति तदस्मै
गवयमारण्यमनुदिशाति तेन चिन्वानस्तनवो नि

षीदेति तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतद्भव
यं ते शुगृच्छतु यं द्विष्मस्तंते शुगृच्छत्विति तद्भवये
च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३४॥ अ
थावेः । इममूर्णायुमित्यूर्णावलमित्येतद्वरुणस्य ना
भिमिति वारुणो ह्यविस्त्वचं पशूनां द्विपदां चतु
ष्पदामित्युभयेषां ह्येष पशूनां त्वग्द्विपदां च चतु
ष्पदां च त्वष्टुः प्रजानां प्रथमं जनित्रमित्येतद्ध
त्वष्टा प्रथमं रूपं विचकाराग्ने मा हिंसीः परमे
व्योमन्निती मे वै लोकाः परमं व्योमैषु लोकेष्वेनं
मा हिंसीरित्येतदुष्ट्रमारण्यमनु ते दिशामीति त
दस्माऽउष्ट्रमारण्यमनुदिशाति तेन चिन्वानस्तन्वो
निषीदेति तेन चिन्वान आत्मानं संस्कुरुष्वेत्येत
दुष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति त
दुष्ट्रे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च॥३५॥
अथाजस्य । अजो ह्यग्नेरजनिष्ट शोकादिति य
द्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजा
यत सोऽअपश्यज्जनितारमग्रऽइति प्रजापतिर्वै
जनिता सोऽपश्यत्प्रजापतिमग्रऽइत्येतत्तेन देवा दे

वतामग्रऽआयन्निति वाग्वाऽअजो वाचो वै देवा देवतामग्रमायंस्तेन रोहमायन्नुपमेध्यास इति स्व र्गो वै लोको रोहस्तेन स्वर्गं लोकमायन्नुप मेध्या स इत्येतच्छरभमारण्यमनु ते दिशामीति तदस्मै शरभमारण्यमनुदिशाति तेन चिन्वानस्तन्वो नि- षीदेति तेन चिन्वान आत्मानं संस्कुरुष्वेत्वेतच्छर भं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तच्छ रभे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च॥३६॥ तदाहुः । यांवै तत्प्रजापतिरेतेषां पशूनां शुचं पा प्मानमपाहंस्तऽएते पञ्च पशवोऽभवंस्तऽएतऽउ त्क्रान्तमेधा अमेध्या अयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि दधाति तस्मादेतस्यां दि शि पर्जन्यो न वर्षुको यत्रैते भवन्ति ॥३७॥

नह्यधुनाप्येतादृशाःके पिपशवोविद्यन्तेयेवैहननकाले किमपिनशोचेयुस्ततः शोचतांसाक्षात्पशूनांयज्ञाऽनर्हत्वा दुत्सृज्यत्वमेवास्तिनतुहननीयत्वमितिभावः नचतेषांयज्ञानर्ह त्वेकेवलस्तच्छोकएवहेतुरितिवाच्यंतेषाममेध्यत्वस्यापिहेतु त्वात्कथममेध्यत्वमितिचेदुच्यतेसर्वथाऽन्नाभावकालेदेवाः

प्रथमंयज्ञियसारंमेधंपुरुषएवप्रददृशुः ततोयज्ञासिध्यर्थंप्रथमं
पुरुषमालेभिरेतदानिमालब्धात्पुरुषान्मेधोऽपक्रम्याश्वंप्रवि
ष्टःपुरुषस्तुकिंपुरुषोजातःपश्चात्पुरुषंपरित्यज्यप्रविष्टमेधत्वे
नाश्वंमेध्यंप्रद्रश्यमेधार्थमश्वमालभन्ततदालब्धादश्वादपिमे
धउत्क्रम्यगांप्रविवेश अश्वश्चगौरमृगोबभूवततोऽश्वंत्यक्त्वा
मेधार्थंप्रविष्टमेधत्वेनगांमेध्यंज्ञात्वातमालेभिरेतस्मादपिमेधो
निःसृत्याविंप्राविशत्गौश्चगवयोऽभवत्तेगांपरित्यज्याऽविं
मेध्यंप्रज्ञायमेधार्थंतमप्यालेभिरेततोऽपिमेधोऽपक्रम्याजंप्रवि
ष्टःअविस्तूष्ट्रोभवत्अविंपरित्यज्याऽजोयदालब्धस्तदामेधः
पृथिवींप्राविशत् अजश्चशरभोऽभवत्तदनंतरंदेवाःपृथिव्यां
मेधमनुजग्मुस्तदामेधोव्रीहिरूपोभूत्वाबहिर्निसृतस्ततोव्रीहि
मेंध्योऽभवत् एवंपूर्वोक्तरीत्यापुरुषस्यमेध्यत्वेप्युत्क्रान्तमेध
त्वादमेध्यत्वंजातमश्वाद्यजपर्यन्तानांतुप्रविष्टमेधत्वेनमेध्य
त्वेजातेप्यपक्रान्तमेधत्वादमेध्यत्वंनिष्पन्नम् अन्येषांपशूनां
तुस्वभावतएवमेधवत्वाभावात्सर्वेपिपशवोऽमेध्याःसन्तिअ
तःसर्वेषांपशूनाममेध्यत्वेनयज्ञानर्हत्वात्कदापितदर्थंनहन्त
व्यास्तन्मांसादीनिचनाश्नीयात् किंचपूर्वोक्तमेधोयस्मात्
व्रीहिरूपोभवत्यस्माच्चाश्वादिपशुषुप्राविशत्ताभ्यांहेतुभ्यां

व्रीहिनिर्मितपशुःकेवलोव्रीहिरेववातत्तत्पशुसंज्ञयासंक्रियमाणआलभ्यतेनतुसाक्षात्पशुः नचानेनकेवलेनहास्येन व्रीहिपशुनैवयष्टव्यंकिंतुपुरोडाशेनसहयष्टव्यं ततोयद्दैवस्यःपशुर्भवतितद्दैवत्यंपुरोडाशमनुनिर्वपन्ति नचास्यव्रीहेः पुरोडाशस्यचरोमत्वगादिमत्वाभावात्पशुत्वंनसंगच्छतइति वाच्यंतत्तुपपिष्टकिंशारूफलीकरणादिनांत्वग्मांसरोमासृगादित्वप्रतिपादनेनपशुत्वप्रतिपादनात् तथाचस्पष्टमृग्वेदान्तर्गतैतरेयब्राह्मणे

हरिः ॐ पुरुषं वै देवाःपशुमालभंत-तस्मादालब्धान्मेध उदक्रामत्सोऽश्वंप्राविशत्तस्मादश्वोमेध्योऽभवदथैनमुत्क्रांतमेधमत्यार्जंत, स किंपुरुषो भवत्तेऽश्वमालभंत. सोऽश्वादालब्धादुदक्रामत्स गां प्राविशत्तस्मात् गौर्मेध्यो भवदथैनमुत्क्रांतमेधमत्यार्जंत, स गौरमृगो भवत्ते गामालभंत. स गोरालब्धादुदक्रामत्सोऽविंप्राविशत्तस्मादविर्मेध्योभवदथैनमुत्क्रांतमेधमत्यार्जंत, सगवयोभवत्तेऽविमालभंत. सोऽवेरालब्धादुदक्रामत्सोऽजं प्राविशत्तस्मादजो मेध्योभवदथैनमुत्क्रांतमेधमत्यार्जंत,स

उष्ट्रो भवत्सोऽजे ज्योक्तमामिवारमत. तस्मादे ष एतेषां पशूनां प्रयुक्ततमो यदजस्तेऽजमाल भंत. सोऽजादालब्धादुदक्रामत्स इमां प्राविशत्त स्मादियं मेध्या भवदथैनमुत्क्रांतमेधमत्यार्जंत, स शरभोऽभवत्त एव उत्क्रांतमेधा अमेध्याः प शवस्तस्मादेतेषां नाश्नीयात्तमस्यामन्वगच्छंत्सोऽ नुगतो व्रीहिरभवत्तद्यत्पशौ पुरोळाशमनु निर्वपं- ति, स मेधेन नःपशुनेष्टमसत् केवलेन नः पशु नेष्टमसदिति. स मेधेन हास्य पशुनेष्टं भवति के वलेन हास्य पशुनेष्टं भवति य एवं वेद ॥८॥

स वा एष पशुरेवालभ्यते यत्पुरोळाशस्तस्य यानि किंशारूणितानि रोमाणि, ये तुषाःसा त्व ग्ये फलीकरणास्तदसृग्यत्पिष्टं किक्नसास्तन्मां सं; यत्किंचित्कंसारं तदस्थि. सर्वेषां वा एष प शूनां मेधेन यजते य पुरोळाशेन यजते. तस्मा दाहुः पुरोळाशसत्रं लोक्यमिति युवमेतानि दिवि रोचनान्यग्निश्चसोम सक्रतू अधत्तं; युवं सिंधूं० रभिशस्तेरवद्यादग्नीषोमावमुंचतं गृभीतानिति व

पायै यजति. सर्वाभिर्वा एष देवताभिरालब्धो भ
वति यो दीक्षितो भवति. तस्मादाहुर्न दीक्षितस्या
श्नीयादिति स यदग्नीषोमावमुंचतं गृभीतानिति व
पायै यजति, सर्वाभ्य एव तद्देवताभ्यो यजमा
नं प्रमुंचति. तस्मादाहुरशितव्यं वपायां हुतायां
यजमानो हि स तर्हि भवति. आन्यं दिवो मात
रिश्वा जभारेति पुरोळाशस्य यजति. अमथ्ना
दन्यं परि श्येनो अद्रेरितीत इव च ह्येष इत इव
च मेधःसमाहृतो भवति. स्वदस्व हव्या समिषो
दिदीहिति पुरोळाशःस्विष्ट कृतो यजति. हविरे
वास्मा एतत्स्वदयतिषमूर्जमात्मन् धत्त. इळामुप
ह्वयते. पशवो वाइळा पशूनेव तदुपह्वयते पशू
न्यजमाने दधाति ॥९॥

॥ तथैवयुजर्वेदांतर्गतशतपथब्राह्मणेपि ॥

हरिः ॐ पशुर्ह वाएष आलभ्यते यत्पुरोडाशः॥५॥
पुरुषं ह वै देवाः । अग्रे पशुमालेभिरे तस्याल
ब्धस्य मेधोऽपचक्राम सोऽश्वं प्रविवेश तेऽश्व
मालभन्त तस्यालब्धस्य मेधोऽपचक्राम स गां

प्रविवेश ते गामालभन्त तस्यालब्धस्य मेधोऽप
चक्राम सोऽविं प्रविवेश तेऽविमालभन्त तस्या
लब्धस्य मेधोऽपचक्राम सोऽजं प्रविवेश तेऽज
मालभन्त तस्यालब्धस्य मेधोऽपचक्राम ॥६॥
स इमां पृथिवीं प्रविवेश । तं खनन्तइवान्वीषु
स्तमन्वविन्दंस्ताविमौ व्रीहीयवौ तस्मादप्येतावेत
र्हि खनन्त-इवैवानुविन्दन्ति स यावद्वीर्यवद्ध वा
ऽअस्यैते सर्वे पशव आलब्धाः स्युस्तावद्वीर्यव
द्धास्य हविरेव भवति य एवमेतद्वेदात्रो सा स
म्पद्यदाहुः पाङ्क्तः पशुरिति ॥७॥ यदा पिष्टान्य
थ लोमानि भवन्ति । यदाप आनयत्यथ त्वग्भ
वति यदा संयौत्यथ मांसं भवति संतत-इव हि
स तर्हि भवति संततमिव हि मासं यदा शृतोऽ
थास्थि भवति दारुण-इव हि स तर्हि भवति दा
रुणमित्यस्थ्यथ यदुद्वासयिष्यन्नभिघारयति तंम
ज्जानं दधात्येषो सा सम्पद्यदाहुः पाङ्क्तः पशुरि
ति ॥८॥ स यं पुरुषमालभन्त । स किम्पुरुषो
ऽभवद्यावश्वं च गां च तौ गौरश्च गवयश्चाभव

तां यमविमालभन्त स उष्ट्रोऽभवद्यमजमालभन्त स शरभोऽभवत्तस्मादेतेषां पशूनां नाशितव्यम पक्रान्तमेधा हैते पशवः ॥९॥

अत्रपुरुषंवैदेवाःपशुमालभन्तेतिपुरुषस्यपशुत्वप्रदर्शनंव्रीहेःपुरोडाशस्यचपशुत्वदृढीकरणार्थमन्यथापुरुषमालेभिरइत्येवब्रूयात्पशुपदंनोब्रूयान्यथापुरुषस्यपशुत्वप्रदर्शनमनवद्यंतथैवव्रीहेःपुरोडाशस्यचपशुत्वंनिरवद्यमितिभावःनचात्रपरिसंख्याताश्वादीनामेवमांसाद्यशनंनिषिध्यते किंतुसर्वेषांपशुत्वजातिविशिष्टानांनिषिध्यतेपरिसंख्यातानांनिषेधेऽमेध्यत्वस्यहेतुत्वेनप्रदर्शितत्वात् अत्रायं भावः येषांयेषांपशूनाममेध्यत्वंतेषांतेषांपशूनांमांसाद्यशनंप्रतिषिध्यतेतत्रपरिसंख्यातानामश्वादीनांमेधोत्क्रमणात्पूर्वंपुरुषनिःसृतमेधप्रवेशनैवहेतुनामेध्यत्वप्रतिपादनात्येषांयेषांपशूनांप्रविष्टमेधत्वंतेषांतेषांपशूनामेवमेध्यत्वम्अतःपरिसंख्याताश्वादिव्यतिरिक्तानांपशुत्वजातिविशिष्टानांसर्वेषामपिपशूनांप्रविष्टमेधत्वाभावादमेध्यत्वंनिष्पन्नंपरिसंख्यातानांत्वपक्रान्तमेधत्वादमेध्यत्वंप्रतिपादितमेवव्रीहेःपशुत्वेनतत्पिष्टादिनांमांसादित्वेपितस्यमेध्यपशुत्वात्तदशनं

न प्रतिषिद्धं तथा च यत्र यत्र मांसादिनां हवनीयत्वेन भक्षणी
यत्वेन च प्रदर्शनं तत्र सर्वत्र व्रीहिपिष्टादिकमेवाभिप्रेतमिति बो
ध्यं नो चेत्तत्पिष्टादिनां मांसादित्वप्रतिपादनस्य वैयर्थ्यं स्यात् स
वा एष पशुरेवालभ्यत इत्यत्र चावधारणार्थेनैवाऽव्ययेन सर्वे
प्यपांक्ताः पशवः पुनरपिऽयावृत्यन्ते उताहो केवलेन पांक्तपशु
ना पुरोडाशेन यजमानास्तन्त्रेण सर्वेषां पशूनां मेधेन यजन्त इति
महदलभ्यफलाभोक्तिः किंच साक्षादश्वादीनामालभनेन नह्य
श्वमेधादियज्ञसिद्धिः कुत इति चेदुच्यते अश्वस्य मेधो यस्मि
न्निति व्युत्पत्त्याश्वसंबंधी यज्ञियसारो मेधो मुख्यो हवनीयो य-
स्मिन् यज्ञे स यज्ञो अश्वमेधशब्देनाभिधीयते तथा च गोसंबंधी
मेधो मुख्यत्वेन हवनीयो यस्मिन् यज्ञे स गोमेधशब्देनोच्यते पुरु
षसंबंधीमेधो मुख्यत्येन हवनीयो यस्मिन् स पुरुषमेधशब्देना-
ख्यायते एवं सति साक्षादश्वादिष्वालब्धेषु तत्तत्संबंधीमेधो ह
वनार्थं नैव लभ्यते तेषामपक्रान्तमेधत्वेन मेधवत्त्वाभावादतस्ते
षामालभनं वृथैव व्रीहिपशुना यजने तु तस्य सर्वपशुमेधरूप
त्वादश्वादिसंबंधीमेधो हवनार्थं लभ्यत एव न चात्र मेधशब्द
स्याप्रशस्तमपि यज्ञवाचकत्वमंगीकृत्याश्वमेधादिशब्देषु षष्ठी
तत्पुरुषः कार्यः तथा सति पुरुषमेधयज्ञाऽश्वमेधयज्ञादिशब्दे

पुयज्ञशब्दस्यपुनरुक्तत्वेनानर्थक्यापत्तिःस्यात्ततोबहुव्रीहि
रेवयुक्तः नचव्यधिकरणोबहुव्रीहिरन्याय्यइतिवाच्यंसंभ
वतिसमानाधिकरणएवव्यधिकरणस्यान्याय्यत्वात्सप्तमी
विशेषणेबहुव्रीहाविति सूत्रेसप्तमीग्रहणेनव्यधिकरणबहुव्री
हेरपिज्ञापितत्वाच्चयद्वाऽभुनाव्रीहेर्मेधरूपत्वादश्वसंज्ञकोमे
धोव्रीहिर्मुख्योहवनीयोयस्मिन्नितिसमानाधिकरणेबहुव्रीहा
वपिनकापिक्षतिः नाप्यत्रमेधशब्दस्ययज्ञियसाराऽतिरिक्तः
कश्चिदप्यन्योगौणोर्थःस्वीकार्यःमुख्यार्थंपरित्यज्यगौणार्थ
स्वीकारेमानाभावात्सायनाचार्यादिकृतभाष्येषुतस्ययाज्ञिय
सारवाचकत्वप्रतिपादनात्सर्वेष्वप्यश्वमेधादियज्ञेष्वश्वादिमे
धएवमुख्योहूयतेतस्मादश्वमेधपुरुषमेधादिशब्देषुमेधशब्दउ
द्दिष्टःतदर्थत्यागेतत्स्वारस्यभंगापत्तिरपिस्यात्किंचवस्तुतः
साक्षादश्वाद्यालभनेमुख्यत्वेनालभनशब्दोपिनप्रवर्त्ततेआ
समन्तात्लभ्यतेअनेनेतिप्राप्त्यर्थकाल्लभ्धातोःसकाशात्
करणेल्युटिसत्यालभनशब्दःसिध्यति लभ्धातोश्चसकर्म
कत्वात्कर्मभूतोमेधआक्षिप्यतेतेनयत्संस्कारविशेषेणमेधः
प्राप्यतेससंस्कारविशेषआलभनशब्देनोच्यतेतथासतिनहि
साक्षात्पशुसंस्कारविशेषेणतन्मेधःप्राप्यतेसाक्षात्पशूनांमे

धत्वाभावात्व्रीहिपशौतुसंस्कारविशेषेणाश्वादिनांमेधःप्रा
प्यतएव व्रीहेःसर्वमेधरूपत्वात् तस्माद्व्रीहिपशोःसंस्कार
विशेषएवमुख्यत्वेनालभनशब्दःप्रवर्त्तते नचासमंतात्ल
भ्यतेअनेनेत्यत्रमांसादिनःकर्मत्वंवाच्यं तस्येप्सिततमत्वा
भावात् यजमानानामालभनाख्यसंस्कारविशेषेणमेधएवे
प्सिततमोनतुमांसादि यद्यपिमांसादिनोपीप्सितत्वंभवति
तथापीप्सिततमत्वाभावान्नकर्मत्वं कर्त्तुरीप्सिततमंकर्मेति
सूत्रेणेप्सिततमस्यैवकर्मत्वविधानात्एतावतासाक्षात्पश्वभा
वेप्रतिनिधिर्व्रीहिपशुरितिकेषांचित्कुतर्कःपरास्तः देवकृतप
श्वालभनेनतुव्रीहियवात्मकोमेधःप्राप्तस्तस्मात्तत्रालभनश
ब्दोमुख्यत्वेनप्रवृत्तः व्रीहिपश्वालभनेनयजमानेप्सितंमांसा
दिकमपिपिष्टादिरूपंप्राप्यतएव इयंव्रीहियवयोरूपत्पत्तिर्दैव
कृतपश्वालभनस्यसृष्ट्यारम्भकालोद्भूतत्वमन्नाभावकालोद्भूत
त्वंचज्ञापयति देवालब्धाश्वादीनांमृगादिरूपैर्भवनंकेवलंदे
वाचरणंज्ञात्वैवतद्वन्मनुष्यैर्नाचरणीयमितिध्वनयति एवंपू
र्वोक्तरीत्याव्रीहियवौव्रीहियवसंज्ञाभ्याम्पशुसंज्ञाभ्यांचनि
गमादिषुसंव्यवह्रियेते तत्राश्वमेधेव्रीहिर्यवोवामुख्यत्वेनाश्व
संज्ञयापुरुषमेधेमुख्यत्वेनपुरुषपशुसंज्ञयागोमेधेगोसंज्ञया

ज्योतिष्टोमादिषु च छागादिसंज्ञाभिर्व्यवह्रियत इति वेदसं
केतः नोचेत् यज्ञविषयकमंत्रब्राह्मणादिषु सर्वत्राऽश्वादीनां वि
शेषणतयोच्चारितस्य मेध्यपदस्य वैयर्थ्यं स्यात् व्यावर्त्याभावा
त् नहि लोकेषु मेध्यत्वामेध्यत्वभेदाभ्यामुभयाविधाः साक्षादश्वा
दयः प्रदृश्यन्ते तस्माद् व्यावर्त्यतावच्छेदकावच्छिन्नानाममेध्या
नामन्येषां साक्षादश्वादीनामनुपलम्भात्तद् व्यावर्त्तकतावच्छे
दकावच्छिन्नस्य मेध्यपदस्य वैयर्थ्यं स्यात् न चात्र विशेषणस्य स्व
रूपज्ञापकत्वं मेध्यत्वस्य स्वरूपाभावात् मेध्यत्वममेध्यत्वं च शा
स्त्रनिष्पन्नमेव न तु स्वरूपनिष्पन्नं शास्त्रेण च साक्षादश्वादीनाम
मेध्यत्वं निष्पादितं व्रीहियवयोश्च मेध्यत्वं निष्पादितं तस्माद् व्या
वर्त्तकतावच्छेदकावच्छिन्नेन मेध्यपदेन व्यावर्त्यतावच्छेदका
वच्छिन्नाः साक्षादश्वादय एव व्यावृत्यन्ते अतः सर्वेषां साक्षाद
श्वादीनां मेध्यपदेन व्यावर्त्यत्वात् यज्ञविषयकमंत्रब्राह्मणादि
ष्वश्वादिशब्दैर्व्रीहियवा एव संज्ञायेते तत्संज्ञाकरणे कारणं तु
मेधस्याश्वादिषु प्रवेश एव देवकृतालभनकाले व्रीहिरूपोयं
साक्षान्मेधोश्वशरीरप्रवेशनेनाश्वत्वं प्राप्तस्तस्मादश्वमेधे मु
ख्यत्वेनाऽश्वसंज्ञया संस्क्रियमाणः सन्नालभ्यते गोप्रविष्टत्वेन गो
त्वं प्राप्तस्ततो गोमेधे गोसंज्ञया संस्क्रियमाणः सन्नालभ्यते देव

कृतानलभनात्पूर्वंपुरूषस्थितत्वेनपुरूषत्वमासीत्तस्मात्पुरूष
मेधेपुरूषसंज्ञयासंस्कुर्वन्तश्च व्रीहिंयवमेववालभन्तेएवंसोयं
साक्षान्मेधोव्रीहिरूपोजातस्तस्माद्व्रीहिसंज्ञयापौर्णमासादि
सर्वयागेषुसंस्क्रियमाणःसन्पुरोडाशत्वंप्राप्नोतितंपुरोडाशं
पृथक्पृथक्कपालेषुसंस्कुर्वन्तःसन्तःपुरोडाशसंज्ञयानिर्व
पन्तिपशुयागेषूभयोःपशुपुरोडाशयोर्विहितत्वादेकत्रस्था
नेपशुसंज्ञया संस्क्रियते अन्यत्रच व्रीहिसंज्ञयासंस्क्रियतेत
दनन्तरं मांससंज्ञया संस्क्रियमाणापिष्टंपुरोडाशेनसहजु
ह्वति अतोयत्रयत्रमेध्यपदविशिष्टा अश्वादयोदृश्यन्ते त
त्रसर्वत्रव्रीहि पशुरेवाभिप्रेतइतिबोध्यं पूर्वकालेकवषपुत्रे
णतुरेणैन्द्रेणमहाभिषेकेणाभिषिक्तः परिक्षित्पुत्रोजनमेज
यः सर्वतः पृथ्वींजयन्सन्मेध्येनैवाश्वेनेजनतुसाक्षादश्वे
न किंचधान्यभक्षकंरुक्मिणं हरितस्रजंसाक्षादश्वंलो
काचारमनुसृत्यसिंहासनसमिपेबबंध नतुयूपे नापिजघा
न तथैवभृगुपुत्रेणच्यवनेनमहाभिषेकेणाभिषिक्तः शार्यातो
मेध्येनैवाश्वेनेजेनतुसाक्षादश्वेन एवंवाजरत्नायनसोमशु
ष्मासत्राजित पुत्रंशतानीक मैन्द्रेणमहाभिषेकेणाभिषिषे
च तस्मात् शतानीकः सर्वतः पृथिवींजयन्परीयाय मे

ध्येनैवाश्वेनेजेतथापर्वतनारदाभ्याममभिषिक्तआम्बाष्ट्योमे
ध्येनैवाश्वेनेजेतथैवपर्वतनारदाभ्यामेवाभिषिक्तउग्रसेनपुत्रो
युधांश्रौष्टिर्मेध्येनैवाश्वेनेजेतथाचकश्यपेनाभिषिक्तोभुवन
पुत्रोविश्वकर्मामेध्येनैवाश्वेनेजेयस्मिन्यज्ञेविश्वकर्मणाकश्य
पायदत्तापृथिवीविश्वकर्माणंप्रत्येतदब्रवीत्हेभूवनपुत्रविश्व
कर्मन्कश्चिदपिमर्त्योमांदातुंनार्हतिएवंसत्यपियस्मात्त्वया
दत्तातस्माद्हंजलेनिमंक्ष्येतवप्रातिज्ञावृथैवेतितथावशिष्ठः
पिजवनपुत्रंसुदासंमहाभिषेकेणाभिषिषेचतस्मात्सुदाःसर्वः
पृथिवींजयन्परीयाय मेध्येमैवाश्वेनेजेतथैवांगिरसःपुत्रेण
संवर्तेनमहाभिषेकेणाभिषिक्तोऽविक्षितपुत्रोमरूत्तोमेध्येनैवा
श्वेनेजेतस्यचपूर्णकामस्यमरुत्तस्यगृहेवायवःपरिवेष्टारआ
सन्तथाचात्रिपुत्रेणोदमयेनाभिषिक्तोगोमेध्ये नैवाश्वेनेजेत
थाचस्पष्टमृग्वेदान्तर्गतैतरेयब्राह्मणाष्टमपञ्चिकायाम् ॥

हरिः ॐ एतेन ह वा ऐन्द्रेण महाभिषेकेण तुरः का
वषेयो जनमेजयं पारिक्षितमभिषिषेच. तस्मादु
जनमेजयः पारिक्षितः समंतं सर्वतः पृथिवीं ज
यन् परियायाऽश्वेनच मेध्येनेजे, तदेषाभियज्ञगा
था गीयते. आसंदीवति धान्यादं रुक्मिणं हरि

तस्त्रजं, अश्वं बबंध सारंगं देवेभ्यो जनमेजय इत्येतेन ह वा ऐंद्रेण महाभिषेकेण च्यवनो भार्गवः शार्यातं मानवमभिषिषेच.तस्मादु शार्यातो मानवः समंतं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे. देवानां हापि सत्रे गृहपतिरासैतेन ह वा ऐंद्रेण महाभिषेकेण सोमशुष्मा वाजरत्नायनः शतानीकं सात्राजितमभिषिषेच. तस्मादु शतानीकः सात्राजितः समंतं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे. एतेन ह वा ऐंद्रेण महाभिषेकेण पर्वतनारदावांबाष्ठ्यमभिषिषिचतुस्तस्मादांबाष्ठ्यः समंतं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे एतेन ह वा ऐंद्रेण महाभिषेकेण पर्वतनारदौ युधांश्रौष्टिमौग्रसैन्यमभिषिषिचतुस्तस्मादु युदांश्रौष्टिरौग्रसैन्यःसमंतं सर्वतः पृथिवीं जयन् परियायाश्वेन च मेध्येनेजे. एतेन ह वा ऐंद्रेण महाभिषेकेण कश्यपो विश्वकर्माणं भौवनमाभिषिषेच. तस्मादु विश्वकर्मा भौवनः समंतं सर्वतः पृथिवीं जयन्परिया

याश्वेन च मेध्येनेजे. भूमिर्हं जगाविस्युदाहरंति.
न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन् भौव
न मां दिदासिथ; निमंक्ष्ये ऽहं सलिलस्य मध्ये
मोघस्त एष कश्यपायास संगर इत्येतेन ह वा
ऐंद्रेण महाभिषेकेण वसिष्ठः सुदासं पैजवनम
भिषिषेच. तस्मादु सुदाः पैजवनः समंतं सर्वतः
पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे. एतेन ह
वा ऐंद्रेण महाभिषेकेण संवर्त आंगिरसो मरुत्त
माविक्षितमभिषिषेच. तस्मादु मरुत्त आविक्षितः
समंतं सर्वतः पृथिवीं जयन् परीयायाश्वेनच मे
ध्येनेजे. तदप्येष श्लोकौ ऽभिगीतो, मरुतः परि
वेष्टारो मरुत्तस्यावसन् गृहे आविक्षितस्य कामप्रे
विश्वे देवाः सभासद इति २१

एतेन ह वा ऐंद्रेण महाभिषिकेणोदमय आत्रेयों
गमभिषिषेच. तस्मादंगः समंतं सर्वतः पृथिवीं ज
यन्परीयायाश्वेन च मेध्येनेजे. स होवाचालोपां
गो दशनागसहस्राणि दशदासीसहस्राणि ददा
मिते ब्राह्मणोप मा ऽस्मिन् यज्ञे व्हयस्वेति तद

प्येते श्लोका अभिगीताः याभिर्गोभिरुदमयं प्रैय मेधा अयाजयन् द्वे द्वे सहस्रे बद्वानामात्रेयो म ध्यतो ददात्. अष्टाशीती सहस्राणि श्वेतान्वैरो चनो हयान्; प्रष्टिं निश्चृत्य प्रायच्छद्यजमाने पुरो हिते. देशाद्देशात्समोळ्हानां सर्वासामाढ्यदुहितॄ णां; दशाददात्सहस्राण्यात्रेयो निष्ककंठयः. द शानागसहस्राणि दत्वात्रेयो वचत्नुके; श्रांत पा रिकुटान्प्रेप्सद्दानेनांगस्य ब्राह्मणः शतं तुभ्यं श तं तुभ्यमिति स्मव प्रताम्यति; सहस्रं तुभ्यमित्यु क्त्वा प्राणान्त्स्म प्रतिपद्यत इति २२

एतेन ह वा ऐंद्रेण महाभिषेकेण दीर्घतमामाम तेयो भरतं दौष्यंतिमभिषिषेच. तस्मादु भरतो दौष्यंतिः समंतं सर्वतः पृथिवीं जयन्परीयायाश्वै रुच मेध्यैरीजे तदप्येते श्लोका अभिगीताः हि रण्येन परीवृतान्कृष्णान् शुक्लदतो मृगान्; मष्णा रे भरतो ददाच्छतं बद्वानि सप्तच भरतस्यैष दौ ष्यंतेरग्निः साचिगुणे चितः; यस्मिन्त्सहस्रं ब्रा ह्मणा बद्वशो गावि भेजिरे. अष्टासप्तति भरतो

दौष्यंतिर्यमुनामनु; गंगायां वृत्रघ्ने बध्नात्पंचपंचा
शतं हयान्. त्रयस्त्रिंशच्छतं राजाऽश्वान् बध्वा
य मेध्यान्;दौष्यंतिरत्यगाद्राज्ञो मायां मायावत्तरः
महा कर्म भरतस्य न पूर्वे नापरे जनाः; दिवं
मर्त्य इव हस्ताभ्यां नोदापुः पंच मानवा इत्ये
तं ह वा ऐंद्रं महाभिषेकं बृहदुक्थ ऋषिर्दुर्मुखा
य पांचालाय प्रोवाच. तस्मादु दुर्मुखः पांचालो
ऽराजा सन्विद्यया समंतं सर्वतः पृथिवीं जयन्प
रीयायैतं ह वा ऐंद्रं महाभिषेकं वासिष्ठः सात्य
हव्योऽत्यरातये जानंतपये प्रोवाच. तस्माद्वत्यरा
तिर्जानंतपिरराजा सन्विद्यया समंतं सर्वतः पृथि
वीं जयन्परीयाय. स होवाच वासिष्ठः सात्यह
व्यो जैषीर्वै समंतं सर्वतः पृथिवीं महन्मा गमये
ति स होवाचात्यरातिर्जानंतपिर्यदा ब्राह्मणोत्तर
कुरून् जयेयमथ त्वमु हैव पृथिव्यै राजा स्याः
सेनापतिरेव ते ऽहं स्यामिति स होवाच वासिष्ठः
सात्यहव्यो देवक्षेत्रं वै तन्नवैतन्मर्त्यो जेतुमहत्य
द्रुक्षो वै म आ ऽतः इदं दद इति ततो हात्य

राति ज्ञानंतपिमात्तवीर्यं निःशुक्रममित्रतपनः शु
ष्मिणः शैब्यो राजा जघान. तस्मादेवंविदुषे ब्रा
ह्मणायैवंचकुषे न क्षत्रियो द्रुह्येन्नेद्राष्ट्रादव पद्येय
न्नेद्रामप्राणो जहदिति जहदितिः २३

॥ तथाच शतपथब्राह्मणे ॥

हरिः ॐ एतेन हेन्द्रोतो दैवापः शौनकः । जनमेज-
यं पारिक्षितं याजयां चकार तेनेष्ट्वा सर्वां पाप-
कृत्यां सर्वां ब्रह्महत्यामपजघान सर्वां; ह वै पाप
कृत्यां सर्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यज
ते ॥ १ ॥ तदेतद्गाथयाभिगितम् । आसन्दीवति
धान्यादं रुक्मिणं हरितस्रजम् अबध्नादश्व;
सारंगं देवेभ्यो जनमेजय इति ॥ २ ॥ एतेऽ
एव पूर्वेऽअहनी । ज्योतिरातिरात्रस्तेन भीमसेन-
मेतेऽएव पूर्वेऽअहनी गौरातिरात्रस्तेनोग्रसेनमेतेऽए
व पूर्वेऽअहनीऽआयुरातिरात्रस्तेन श्रुतसेनमित्येते
पारिक्षितीयास्तदेतद्गाथयाभिगीतं पारिक्षिता य-
जमाना अश्वमेधैः परोऽवरम् अजहुः कर्म पा-
पकं पुण्याः पुण्येन कर्मणेति ॥ ३ ॥ एतेऽएव

पूर्वे ऽअहनी । अभिजिदतिरात्रस्तेन ह पर आट्णार ईजे कौसल्यो राजा तदेतद्गाथयाभिगीतमट्णारस्य परः पुत्रोऽश्वं मेध्यमबन्धयत् हैरण्यनाभः कौसल्यो दिशः पूर्णा अमंहतेति ॥ ४ ॥ एते ऽएव पूर्वे ऽअहनी । विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्गहेणेजऽऐक्ष्वाको राजा तस्मादेतदृषिणाभ्यनूक्तमस्माकमत्र पितरस्तऽआसन्त्सप्तऽऋषयो दौर्गहे बध्यमानऽइति ॥ ५ ॥ एतेऽएव पूर्वेऽअहनी । महाव्रतमतिरात्रस्तेन ह मरुत आविक्षित ईजऽआयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो बभूवुस्तदेतद्गाथयाभिगीतं मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद इति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥ एतेऽएव पूर्वेऽअहनी । अप्तोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्य ईजे पाञ्चालो राजा क्रिवय इति ह वै पुरा पञ्चा

लानाचक्षते तदेतद्गाथयाभिगीतम् अश्वं मेध्यमालभत क्रिवीणामतिपूरुषः पाञ्चालः परिवक्रायां सहस्रशतदक्षिणमिति ॥ ७ ॥ अथ द्वितीयया । सहस्रमासन्नयुता शता च पञ्चविंशतिः दिक्को-दिक्कः पञ्चालानां ब्राह्मणा या विभेजिर इति ॥ ८ ॥ त्रिवृदग्निष्टोमः । पञ्चदश उक्थ्यः सप्तदशं तृतीयमहः सोक्थकमेकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्संधिरित्येषोऽनुष्टुप्सम्पन्न स्तने हैतेन ध्वसा द्वैतवन ईजे मात्स्यो राजा यत्रैतद्द्वैतवनं सरस्तदेतद्गाथयाभिगीतं चतुर्दश द्वैतवनो राजा संग्रामजिद्धयान् इन्द्राय वृत्रघ्नेऽबध्नात्तस्माद्द्वैतवनं सर इति ॥ ९ ॥ चतुर्विंशाः पवमानाः । त्रिवृदभ्यावर्तं चतुश्चत्वारिंशाः पवमाना एकविंशमभ्यावर्तमष्टाचत्वारिंशाः पवमानास्त्रयस्त्रिंशमभ्यावर्तमाग्निष्टोमसामाद्वात्रिंशान्युक्थान्येकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्संधिरिति ॥ १० ॥ एतद्विष्णोः क्रान्तम् । तेन हैतेन भरतो दौःष्यन्तिरीजे तेनेष्ट्वेमां व्यष्टिं व्यानशे येयं भ-

रतानां तदेतद्गाथयाभिगीतमष्टासप्ततिं भरतो दौः ष्यन्तिर्यमुनामनु गङ्गायां वृतघ्ने ऽबध्नात्पञ्चपञ्चाशतं हयानिति ॥ ११ ॥ अथ द्वितीयया । त्रयस्त्रिंशं शतं राजाश्वान्बद्ध्वाय मेध्यान् सौद्युम्नि रत्यष्ठादन्यानमायान्मायवत्तर इति ॥ १२ ॥ अथ तृतियया । शकुन्तला नाडपित्यप्सरा भरतं दधे परःसहस्रानिन्द्रायाश्वान्मेध्यान्य आहरद्विजित्य पृथिवीं सर्वामिति ॥ १३ ॥ अथ चतुर्थ्या । महदद्य भरतस्य न पूर्वे नापरे जनाः । दिवं मर्त्य-इव बाहुभ्यां नोदापुः पञ्च मानवा इति ॥ १४ ॥ एकविंशस्तोमेन । ऋषभो याज्ञतुर ईजे श्विक्नानां राजा तदेतद्गाथयाभिगीतंयाज्ञतुरे यजमाने ब्रह्माण ऋषभेजनाः अश्वमेधे धनं लब्ध्वा विभजन्ते स्म दक्षिणा इति ॥ १५ ॥ त्रयस्त्रिंशस्तोमेन । शोणः सात्रासाह ईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतं सात्रासहे यजमानेऽश्वमेधेन तौर्वशाः उदिरते त्रयस्त्रिंशाःषट् सहस्राणि वर्मिणामिति ॥ १६ ॥ अथ द्वितियया । ष

ट्षट् षड्वा सहस्राणि यज्ञे कोकपितुस्तव उदी
रहे त्रयस्त्रिंशाः षट् सहस्राणि वर्मिणामिति ॥
१७ ॥ अथ तृतियया । सात्रासहे यजमाने पा
ञ्चाले राज्ञि सुस्राजि अमाद्यदिन्द्रः सोमेनातृप्य
न्ब्राह्मणा धनैरिति ॥ १८ ॥ गोविनतेन शता
नीकः । सात्राजित ईजेकाश्यस्याश्वमादाय त
तो हैतदर्वाक्काशयोऽग्नीन्नादधतऽआत्तसोमपीथाः
स्म इति वदन्तः ॥ १९ ॥ तस्य विंधा चतुर्वि
शाः पवमानाः । त्रिवृदभ्यावर्तं चतुश्चत्वारिंशाः
पवमाना एकविंशान्याज्यानि त्रिणवान्युक्थान्ये
कविंशानि पृष्ठानि षट्त्रिंशाः पवमानास्त्रयस्त्रिंश
मभ्यावर्तमाग्निष्टोमसामादेकविंशान्युक्थान्येकाविंशः
षोडशी पञ्चदशी रात्रिस्त्रिवृत्संधिः ॥ २० ॥
तदेतद्गाथयाभिगीतं । शतानीकः समन्तासु मे-
ध्यं सात्राजितो हयम् आदत्त यज्ञं काशीनां भ
रतः सत्वतामिवेति ॥ २१ ॥ अथ द्वितीयया ।
श्वेतं समन्तासु वशं चरन्तं शतानिको धृतराष्ट्र
स्य मेध्यम् आदाय सह्वा दशमास्यमश्वं शतानी-

को गोविनतेन हेज ऽइति ॥ २२ ॥ अथ चतु
र्थ्यां । महदद्य भरतानां न पूर्वे नापरे जनाः दिवं
मर्त्य-इव पक्षाभ्यां नादोपुः सप्त मानवा इति ॥
२३ ॥ अथातो दाक्षिणानाम् । मध्यं प्राति राष्ट्र
स्य यदन्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्ता
त्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतिच्यध्वर्योरुदी
च्युद्गातुस्तदेव होतृका अन्वाभक्ताः ॥ २४ ॥ उ
दयनीयायां संस्थितायाम् । एकविंशतिं वशा
अनूबन्ध्या आलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या
एतासां देवतानामाप्त्यै तद्यत्बार्हस्पत्यान्त्या भव
न्ति ब्रह्म वै बृहस्पतिस्तद् ब्रह्मण्येवान्ततः प्रति
तिष्ठति ॥ २५ ॥ अथ यदेकविंशतिर्भवन्ति ।
एकविंशो वाऽएष य एष तपति द्वादश मासाः
पञ्चऽर्तवस्त्रय इमे लोका असावादित्य एकविं
श एतामभिसम्पदम् ॥ २६ ॥ उदवशानीया
यां संस्थितायाम् । चतस्रश्च जायाः कुमारीं प
ञ्चमीं चत्वारि च शतान्यनुचरीणां यथासमु
दितं दक्षिणां ददति ॥ २७ ॥ अथोत्तरं संवत्स

रमृतुपशुभिर्यजते । षड्भिराग्नेयैर्वसन्ते षड्भिरै न्द्रैर्ग्रीष्मे षड्भिः पार्जन्यैर्वा मारुतैर्वा वर्षासु षड् भिर्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते ष ड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षड्तवः संवत्सरः ऋतुष्वेव संवत्सरे प्रतितिष्ठति षट्त्रिंशदेते पशवो भवन्ति षट्त्रिंशदक्षरा बृहती बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितस्तद्वन्ततो बृहत्यैव छन्दसा स्वर्गे लोके प्रतितिष्ठति ॥ २८ ॥

अत्रसर्वत्रव्यावर्तकतावच्छेदकविशिष्टेन मेध्यपदेन व्यावर्त्यतावच्छेदकयुक्तसाक्षादश्वव्यावृत्ति पूर्वकविशेष्य तावच्छेदकावच्छिन्नव्रीहिपशुरेवविशेष्यते आसन्दीवति धान्यादं रुक्मिणंहरितस्त्रजमश्वंबबन्धेत्यादिवाक्येषु पुनः पुनः साक्षादश्वबंधनोक्तिरपि साक्षादश्वहिंसनाभावंध्वन यति अन्यथाजघानेतिब्रूयात् अत्रेत्थंव्यवस्थेयं मेध्यश- ब्दोद्विविधो मेधवद्वाचकःपवित्रवाचकश्चेति तत्रमेधवद् वाचकःपारिभाषिकयोगरूढः पवित्रवाचकस्तुरूढएव त त्रयोगरूढोमांसवपादियज्ञसंपदर्थेदेवतृप्तिकारकोयोव्रीहि पशुः संस्क्रियतेतमेवज्ञापयतिसचपशुः यूपएवबध्यते न

त्वन्यत्र रूढस्तुविशेष्यवस्तुनः पवित्रत्वंज्ञापयतियथा मे
ध्या आपइत्यादिषुतथासतिलोकव्यवहारमनुसृत्येन्द्रमुद्दिश्य
योधान्यादःपवित्राऽश्वआनीयतेसस्त्रगादिभिःस्वलङ्कृतोय
त्रकुत्रापिस्वेप्सितस्थलेबद्धःस्पृष्टःसन्नुत्सृज्यतेनतुनिहन्यते
अतएवसिंहासनसमीपेगंगायांचबबन्धेतिनिर्दिष्टंनोचेद्यू
पेबबन्धेतिब्रूयात् अतोवायव्यं श्वेतमालभेतेत्यादिवचनेषु
श्वेतव्रीहिरेवाभिप्रेयते तथै वाग्नयेछागस्यहविषोवपायामे
दसः प्रेष्यानुब्रूहित्यादिषु छागादिशब्दैस्तत्तत्संज्ञाभिःसं
स्क्रियमाणोव्रीहिरेवबोध्यः मेदःप्रभृतिशब्दैश्च तत्तत्संज्ञा
भिःसंस्कृताः किकूनसादयोव्रीहेरवयवाएवबोध्याःनचपशु
शब्दस्य चतुष्पाज्जाति विशेषेरूढत्वात्व्रीहेःपशुत्वमयुक्त
मितिमन्तव्यंश्रुतौद्विपदांपुरुषाणां पादाद्यवयव रहितानां
पदार्थानांचपशुत्वप्रदर्शनात् तथाहि

हरि ॐ देवायद्य ज्ञंतन्वाना अबध्नन्पुरुषंपशुम्

हरि ॐ उषा वाऽअश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षु
र्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आ
त्माश्वस्य मेध्यस्य द्यौष्पृष्ठमन्तरिक्षमुदरं पृथिवी
पाजस्यं दिशः पार्श्वेऽअवान्तरदिशः पर्शव ऋ

तवोऽऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसान्यूवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचन्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वाऽअश्वं पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेन्यं पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वाऽअश्वं महिमानावभितःसम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान्त्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥१॥

हरि ॐ तद्यदेनान्प्राणेभ्योऽधिनिरमिमीत तस्मादाहुः प्राणाः पशवइति इत्यादि

एवंवेदेषुबहूनां पदार्थानां पशुत्वप्रदर्शनाच्चतुष्पाज्जातिविशेषेपशुशब्दोरूढोनभवतिकिंतुपारिभाषिकोयोगरूढएवतथाचस्यष्टंशतपथब्राह्मणे

हरि ॐ स एतान्पञ्चपशूनपश्यत् पुरुषमश्वं गामविम

ज्ञं यदपश्यत्तस्मादे तेपशवः ॥ २ ॥ स ए-
तान्पञ्च पशून्प्राविशत् स एते पञ्चपशवोऽभ
वत्तमु वै प्रजापतिरन्वैवैक्षत ॥ ३ ॥ स एतान्प
ञ्च पशूनपश्यत् यदपश्यत्तस्मादेतेपशवस्ते ध्वे
तमपश्यत्तस्माद्वैवैतेपशवः

एवंप्रजापतेः प्रेक्षितत्वमेव पशुशब्दस्य प्रवृत्तिनिमि
त्तं तस्माद्व्रीहावपि प्रजापतेः प्रेक्षितत्वस्यसंभवात् तत्र
पशुत्वं युक्तमेवेतिदिक् नचपूर्वपरिसंख्या ताश्वादिव्याति
रिक्ताःकेचिदप्यन्ये पशवो मेध्याःसन्तीती शंकितव्यं
सर्वेषामपिसाक्षात् पशूनामुत्क्रान्त मेधत्वादितिस्पष्टमैतरे
य ब्राह्मणे शतपथब्राह्मणे च

हरिः ॐ सर्वेषां वा एष पशुनांमेधोयद् व्रीहियवा
वित्यादि

एवं सर्वेपि साक्षात् पशवो यज्ञार्हानभवन्ति तेषां
मांसादिकंचनाशितव्यमितिदिक् सर्वथा व्रीहियवाद्यन्ना
भावकालेनुवंगस्थ प्रभृतयोऽमेध्यानपिसाक्षात् पशून्यज्ञ
श्राद्धाद्यर्थं मगस्त्याचरण मनुसृत्यहिंसन्तिगुर्जरस्थादय
स्त्वन्नाभावकाले पिसाक्षात्पशून् नैवहिंसन्ति यद्यपिवेदे

नान्नसत्वे व्रीहिपशुहिंसाप्रदर्शिता सर्वथाऽन्नाभावकाले च साक्षात्पशु हिंसाप्रदर्शिता तथा पिशिष्टास्तूभयोः कालयो रुभयविधामपि हिंसांनैव कुर्वन्ति हिंसायां दोषश्रवणात् निवृत्तौ पुण्यश्रवणाच्च विहितहिंसाया अ हिंसात्वेपि वेदेनहिंसाजन्य फलाश्रयत्वंसमूलं नैवप्रत्या ख्यातं नोचेत्तुहिंसाश्रयाणां विद्योत्सर्जन शीलानां हिं सानुरूपधूमरात्र्यादिगमनेन चान्द्रगामिनां यज्ञजन्य पु ण्येक्षीणेकथं पुनः पतनशीलत्वं प्रदर्शितं हिंसोत्सर्जन शीलानांविद्या श्रयाणां ब्रह्मलोकगामिनां कथंपुनर्नप्र त्या वर्त्तन शीलत्वं प्रदर्शितंपुण्यस्योभयत्रापिसमान शी लत्वादुभयोर्मार्गयोरपि समानशीलत्वे नैवभवितव्यंयुक्तम् अतोयज्ञकालेयज्ञजन्यफलेन यज्ञान्तर्गतहिंसाजन्यफलं प्रच्छाद्यतेनतुनिहन्यते तेनयज्ञजन्यफलेक्षीणे हिंसाजन्य फलं प्रकटीभवति तस्माद् हिंसाश्रयाणां चांद्रगामिनां हिंसाजन्यफलाश्रयत्वात् पुनः प्रत्यावर्त्तनशीलत्वं विद्या श्रयाणांतु हिंसाया अभावान्नप्रत्यावर्तन शीलत्वमितिबो ध्यम् एतदेवाभिप्रेत्य यावेदविहिताहिंसानियता स्मिश्चरा चरे अहिंसामेवतांविद्याद्वेदाद्धर्मोहि निर्बभाविथा द्यहिं

सात्वप्रतिपादकवाक्येषुपर्युदासःकृतःपर्युदासस्यहिसदृग्ग्रा
हित्वादहिंसाशब्देनहिंसाभिन्नोहिंसासदृक्कश्चित्पदार्थोगृह्य
तेसदृक्त्वंतुतद्भिन्नत्वेसतितद्गतभूयोधर्मवत्त्वंतथाचहिंसा
भिन्नत्वेसतिहिंसागतभूयोधर्मःपातनधर्मः एवंवेदविहितहिं
सायाअहिंसात्वेपितादृगहिंसायाः पातनधर्मावच्छिन्नत्वात्
तदवच्छिन्नानांचांद्रगामिनांपुनः पतनशीलत्वमितिसिद्धम्
अतएवनिरुक्तेत्रयोदशाध्याये

हरि ॐ अथये हिंसामाश्रित्य विद्यामुत्सृज्यमहत्तपस्ते
पिरेचिरेणवेदोक्तानिवाकर्माणिकुर्वन्तितेधूममभिसं
भवन्तिधूमाद्रात्रिंरात्रेरपक्षीयमाणपक्षमपक्षीयमाण
पक्षाद्दक्षिणायनंदक्षिणायनात्पितृलोकंपितृलोकाच्चं
द्रमसंचंद्रमसोवायुंवायोर्वृष्टिंवृष्टेरोषधयश्चैतद्भूत्वात
स्यसंक्षयेपुनरेवेमंलोकंप्रतिपद्यन्ते ॥ २२ ॥

हरि ॐ अथयेहिंसामुत्सृज्यविद्यामाश्रित्यमहत्तपस्तेपिरे
चिरेणज्ञानोक्तानिवाकर्माणिकुर्वन्तितेर्चिरभिसंभव
न्त्यर्चिषोऽहरन्हआपूर्यमाणपक्षमापुमाणपक्षादुदग
यनमुदगयेनाद्देवलोकंदेवलोकादादित्यमादित्याद्वै
द्युतंवैद्युतादात्मानसंमानसःपुरुषोभूत्वाब्रह्मलोकमभि

संभवन्तितेनपुनरावर्तन्तोशिष्टादंदशूकायतइदंनजा नन्तितस्मादिदंवेदितव्यमथाप्याह ॥

॥ शतपथब्राह्मणेपि ॥

हरि ॐ ये चामीऽअरण्ये श्रद्धां सत्यमुपासते तेऽर्चि रभिसम्भवन्त्यर्चिषोऽहरन्हआपूर्यमाणपक्षमापूर्यमा णपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देव लोकं देवलोकादादित्यमादित्याद्वैद्युतंतान्वैद्युतात्पु- रुषो मानस एत्य ब्रह्मलोकान्गमयति ते तेषु ब्र ह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पु- नरावृत्तिरस्ति ॥ १८ ॥ अथ ये यज्ञेन दानेन । तपसा लोकं जयन्ति ते धूममभिसम्भवन्ति धू माद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्या न्षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलो- कं पितृलोकाच्चन्द्रंते चन्द्रं प्राप्यान्नं भवन्ति तां- स्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वे त्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेम मेवाकाशमभिनिष्पद्यन्तऽआकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति तऽएवमे

वानुपरिवर्तन्तेऽथ यऽएतौपन्थानौ न विदुस्ते की
टाः पतङ्गा यदिदं दन्दशूकम् ॥ १९ ॥

श्रूयतेच

वेदाहमेतंपुरुषंमहांतमादित्यवर्णंतमसःपरस्तात्तमेववि
दित्वातिमृत्युमेतिनान्यःपंथाविद्यतेयनाय ॥

प्रकाशितमिदंनिगमरहस्यमहंमदाबाद
पुरेनिवसताभोलानाथेनशास्त्रिणानिगमा
र्थप्रकाशकभ्रामितचेतसांभ्रमनिवृत्यर्थम्

# निगमरहस्य

## विज्ञापन

ऋग्, यजुष्, सामन्, अने अथर्वन् ए चार वेद तथा इतिहास, पुराण, गाथा अने नाराशंसी एटलां महद्भूतनुं निःश्वसित एटले इश्वरनी वाणी छे, एम वेदमां कह्युंछे. तेमांथी चार वेदनुं एक पुस्तक एटले प्रथम एक वेद हतो. पण कलियुगना मनुष्योने अल्प बुद्धिनां देखी वेदव्यासे तेना चार बिभाग करीने चार ऋषिओने आप्या' ऋग्वेद पैलऋषिने, सामवेद जैमिनिने, यजुर्वेद वैशंपायनने, अने अथर्ववेद सुमन्तु ऋषिने आप्यो. अने इतिहास तथा पुराण जे पांचमो वेद कहेवायछे, ते सुतपौराणिकना पिता रोमहर्षणने आप्यो. उपर लखेला चार वेद तथा इतिहासपुराण रूपी पांचमो वेद एओनो स्त्री, शूद्रादिकने अधिकार नहि होवाथी तेमनाउपर व्यासजीए कृपा करीने भारत रच्युं. जेथी तेओने पण धर्म जाणवामां आवे. एटलाथी आत्माने संतोष थयो नहि. त्यारे केटलोक काल गया पछी नारद मुनिना उपदेशथी भगवद्गुणानुवर्णन करवा माटे तेणे श्रीमद्भागवत कर्युं.एवुं भागवतमां कहेलुंछे. मनु,अत्रि, विष्णु, हारित,याज्ञवल्क्य, उशनस्,अंगिरस्,यम,आपस्तंब,संवर्त,कात्यायन,बृहस्पति,पराशर,व्यास, शंख, लिखित, दक्ष, गौतम, शातातप अने वसिष्ठ इत्यादि स्मृतिओने धर्म शास्त्र कहेछे. ए स्मृतिओ केवल वेदार्थनेज अनुसरेछे, तेमज गौतमन्याय अने काणादन्याय ए बे प्रकारनुं न्यायशास्त्र गणायछे.

तथा पूर्वमीमांसा अने उत्तरमीमांसा ए बे प्रकारनुं मीमांसाशास्त्र गणायछे. ए रीतिए चार वेद तथा वेद रूपि पुराण, न्याय, मीमांसा, धर्मशास्त्र, शिक्षा कल्प, व्याकरण, निरुक्त, छंदस् अने ज्योतिष् ए चतुर्दश विद्याना अने धर्मना स्थानकछे. एम धर्मशास्त्रमां कहेलुं छे.

ए चतुर्दश विद्यामां स्त्री शूद्रादिने अधिकार नथि एवुं धर्म शास्त्रमां कहेलुंछे. एओनी यथासंभव एकवाक्यता मेळवेथी जे निर्गालित अर्थ थायछे ते शास्त्रनो सिद्धांत गणायछे. एक वाक्यता मेळववानुं कारण एछे के कोइनुं कृत्रिम अथवा खोटो अर्थ करेलो जुदो निकळी आवेछे तेमां पुराण अने स्मृति ए बेउमां कदापि कोइ ठेकाणे विरुद्ध देखाय तो पुराण करतां स्मृति बलवती गणायछे. स्मृति अने श्रुतिमां विरुद्ध जणायतो श्रुति बलवती गणायछे. कल्पना आरंभमां ब्रह्माना मुखथी मन्वादिओ वेदनुं श्रवण करेछे, माटे वेदने श्रुति कहेछे. तेमज पूर्व कल्पना धर्मोने ए मन्वादिओ स्मरण करीने कहेछे माटे धर्मशास्त्रने स्मृतिओ कहेछे. ए श्रुति स्मृतिओने कपोलकल्पितकुतर्कोथी जे अनादर करेछे तेने धर्मशास्त्र नास्तिक कहेछे. केवल प्रत्यक्ष प्रमाणथीज जगतनो व्यवहार चालतो नथि. अनुमान उपमान अथवा शाब्द प्रमाणथी अप्रत्यक्ष वस्तुनु पण ज्ञान थायछे. ए श्रुति स्मृत्यादि चतुर्दश विद्या मुख्य अनादि शाब्द प्रमाणछे. जेम कल्पना आरंभमां अनादि कालथी कर्मानुसारे करीने पूर्व कल्पमां जेवी सृष्टि हती तेवी रचायछे, तेम चतुर्दश विद्या पण अनादिकालथी पूर्वकल्पमां हती तेमज रचायछे. सृष्टि, तथा कर्मने जेओ अनादि मानता नथि ते जगत्स्रष्टा विषे निर्दयत्व, वैषम्य, कृतध्वंसकत्व अने अकृताभ्यागमकत्व प्रभृति दोष आरोपि-

मे तेने दुषित करेछे. श्रुति स्मृतिमां जे जे कह्युंछे ते सघळुं दोष रहित अने प्रमाण सिद्धछे. प्रत्येक वेदना मंत्र, ब्राह्मण, अने उपनिषद् एवा त्रण भागछे, तेमां मंत्र करतां ब्राह्मण तथा उपनिषद्मां हरेक विषय वधारे स्पष्टताथी समजाव्योछे. समग्र वेदना कर्मकाण्ड अने ज्ञान काण्ड एवा बे मुख्य भागछे. कर्मकाण्डमां वैश्वदेव, अग्न्याधान, अग्निहोत्र, दर्श पौर्णमास, चातुर्मास्य इष्टिओ, ज्योतिष्टोम, अश्वमेध, गोमेध, अने नरमेध इत्यादि अनेक प्रकारनां कर्म वरणवेलां छे. तेमज ज्ञानकाण्डमां श्रवण, मनन, निदध्यास, ध्यान, धारणा, यम, नियम, समाधि, इत्यादि ब्रह्मज्ञानना उपायो, तथा ब्रह्मनां स्वरूप, अने तटस्थ लक्षणो तथा कर्मकाण्डमां कहेला यज्ञोने ज्ञानमार्गथी करवानो प्रकार इत्यादि ज्ञान वर्णवेलु छे तेओमांथी जेने धर्म जिज्ञासा छे. ते कर्मकाण्डनो आश्रय करेछे; अने जेने ब्रह्मजिज्ञासा छे ते ज्ञान काण्डनो आश्रय करेछे. कर्मकाण्डनो आश्रय करनार धूम, त्यांथी रात्रि, कृष्णपक्ष, दक्षिणायन, पितृलोक, अने त्यांथी चंद्रलोकमां जाय छे; त्यां तेनुं पुण्य क्षीण थयेथी ते देवताओनुं अन्न थायछे; अने देवो तेनुं भक्षण करेछे. पछी वायु, वृष्टि, अने ओषधिद्वारे पुनः आ लोकमां आवी जन्म मरणादि पामेछे.

अने जे ज्ञानकाण्डनो आश्रय करेछे ते अर्चिष् त्यांथी दिवस, शुक्लपक्ष, त्यांथी उत्तरायन, देवलोक, सूर्यलोक, वैद्युत अने त्यांथी ब्रह्म लोकमां जायछे, त्यां समष्टयभिमानि पुरुषनुं सायुज्य (मोक्ष) पामेछे. ते पुनः आ लोकमां आवतो नथि.

तेमज कर्म काण्डना अन्तर्गत जे उपासना छे तेना आश्रय

करनारने पण ए धूम मार्गे करी चंद्र लोकनी प्राप्ति अने त्यांथी पुन: पतन थायछे. अने ज्ञान काण्डना अन्तर्गत जे उपासना रहेलीछे ते- नो आश्रय करनार अर्चिष् मार्गे करी ब्रह्म लोकमां जायछे त्यांथी पु- न:पतन थतुं नथि.

कर्मकाण्डना आश्रय करनारने अंधकार मार्गे जवुं, अने पुन: प- तन थवुं तेनो हेतु ए छे के तेने अज्ञान रूपी अंधकार अने हिंसा ए बेनो आश्रय करवो पडेछे,केवल प्राणिना घात करवानेज वेदमां हिंसा ग- णीछे एम नथि,वृक्ष वनस्पत्यादिना ध्वंस करवाने पण हिंसाज गणेलीछे. वेदमां जे जे ठेकाणे वनस्पत्यादिनां स्तुत्यादिक करेलां छे ते ठेकाणे जेम प्राणिनां करता होय तेमज करेलांछे, अेटलुज नहि पण जगत्- ना पृथिव्यादि सघळा पदार्थोने प्राणिना रूपकमांज वर्णवेला छे. खोदि करवामां पृथ्वी उपर जे कोदाळिनो प्रहार थाय छे. तेने क्रौर्य कर्म गणी तन्निमित्तक वेदे प्रायश्चित्त कल्पेलुं छे. सारांश के जगत्‌ना प- दार्थ मात्रने प्राणिना रूपकमां वर्णवेला छे. तेथी तेना ध्वंस विषय मां सघळे ठेकाणे हिंसा शब्दनो निर्देश करेलो छे.

सघळा यज्ञोमां समिधादिने अर्थे नानाप्रकारनी वनस्पतिओ अ- ने वृक्षादिनो ध्वंस करवो पडे छे. तेथी यज्ञोने हिंसामय यज्ञ कहेछे.

ए कर्म काण्डमां मेध्य अने अमेध्य एवा बे प्रकारना पदार्थो ग- णाय छे तेमांथी मेध्य पदार्थो यज्ञना काममां आवेछे. अने अमेध्य पदार्थो आवता नथि. हालमां जे साक्षात् पशुओ देखीए छीए तेने अमेध्य गणेलाछे तेथी ते यज्ञना काममां आवता नथि. व्रीहि तथा यव अे बे मेध्य पदार्थो गणेलाछे तेथी ते यज्ञना काममां आवेछे अे

बेउने मेध्य गणवानु कारण अेछेके देवोअे ज्यारे प्रथम पुरुषनुं आलभन (अेक जातनो संस्कार. स्पर्श) कर्युं त्यारे तेमांथी मेधे निकळीने अश्वमां प्रवेश कर्यो तेथी अश्वनुं आलभन कर्युं त्यारे अश्वमांथी पण मेधे उत्क्रमण करीने गोमां प्रवेश कर्यो तेथी तेमणे गोनुं आलभन कर्युं त्यारे तेमांथी पण निसरीने अविमां जतो रह्यो तेथी तेमणे अविनुं आलभन कर्युं त्यारे तेमांथी निकळी अजमां गयो ते अजनु पण आलभन कर्युं त्यारे पृथ्वीमां गयो त्यारे देवो तेने पृथ्वीमां खोळवा लाग्या त्यारे व्रीहि तथा यव रूपे बहार उगी निकळ्यो, तेथी ते व्रीहि तथा यव मेध्य एटले यज्ञना उपयोगमां आवे एवा थया. उपर लखेला पांच प्राणीमां मेधे प्रवेश कर्यो तेथी ते पण पशु मेध्य थया खरा पण तेमांथी मेध निसरी गयो एटले ते अमेध्य गणाया एटले यज्ञना काममां आवता नथि, पण मेधे ए पांच पशुओमां प्रवेश कर्यो. अने पोते व्रीहि तथा यव रूपे उगी निकळ्यो ते बेउ कारणथी ते व्रीहि अथवा यवना उपर ते पशुओना नामथी संस्कार करवा पडेछे जेमके अश्वमेधमां मुख्य अश्वना नामथी पुरुष मेधमां पुरुषना नामथी इत्यादि (जेम श्राद्धमां दर्भ) तेजकारण लइने याज्ञिको पिष्टपशु करेछे वळी तेज हेतु लइने ब्रह्माए पण ए पशुओनो उत्सर्ग करेलोछे तेणे सृष्टिना आरंभकालमां मन तथा चक्षुष प्रभृति पोतानी इंद्रियोथी ए पुरुषादि पांच पशुओ उत्पन्न करीनें तेओने यज्ञना उपयोगमां लेवानी लिप्सा करी त्यारे ए पांच पशुओ शोक करवा लाग्या त्यारे ब्रह्माए कह्युं हे अग्नि ! पुरुष रूपी द्विपाद पशु तथा अश्वादि चतुष्पाद पशुओनी हिंसा करवी नहि कारण के ए पशुओ अमेध्य थयेलाछे तेथी ते यज्ञना काममां आवता नथि अने

एनुं मांस भक्षण करवुं नहि एमनो मेध व्रीहि तथा यव रूपे थयोछे तेने तुं सेव. तेमज आगळ जनमेजय प्रभृति जे जे राजाओए यज्ञ करेलाछे तेमणे पण ए मेध्य वस्तुथी करेलाछे लोकाचार प्रमाणे साक्षात् पशुने माला वस्त्रादिथी शणगारी सिंहासनादि पोताना इप्सित स्थलमां बांधीने स्पर्श मात्र करेलो छे. एम वेदमां कहेलुं छे.

तेमज वरुणप्रघासा नामना कर्ममां वरुण देवताने प्रत्यक्ष पशु आपवानां कहेलां छे. ते ठेकाणे पण यवना पिष्टना पशु करीने आपवां एम वेदमां कहेलुं छे. ए मेध्य पदार्थ उपर पशुना नामथी संस्कार थायछे तेथी तेना चोखा तथा छोतरां इत्यादि अवयवोने मांस, त्वचा, रुधिर, इत्यादि गणेलांछे. अने ते उपर लखेलां पांच प्राणी तथा बीजी सघळी जातिनां प्राणि अमेध्य गणायछे तेथी तेनुं मांस भक्षण करवुं नहि एम वेदमां कहेलुछे सारांश के सघळे ठेकाणे मांस वपादि शब्दोए करीने ए व्रीहिना अवयवोज लेवायछे वेदमां व्रीहि तथा यवने पशु गणेछे एटलुंज नहि पण कोइ कोइ प्रसंगे जगत्‌ना सघळा पदार्थोने पशुना रूपकमां वर्णवेला छे. अने तेना विध्वंस करवाने वेदे हिंसा गणेलीछे. तेथी यज्ञमां पशु हिंसाछे एम कहेवायछे.

एम छतां पण पुरातन काळमां अगस्त्य नामना कोइ एक ऋषिए पोतानां वृद्ध माता पिता प्रभृतिना प्राण राखवाने अर्थे यथा विधि हिंसा करी हती,ते काल एवो हतो के यज्ञमांपुरोडाश करवानेपण व्रीहि यवादि कोइ पण अन्न हतुं नहि; तेथी तेणे शास्त्रमां गोधा कच्छपादि जे प्राणीओ भक्ष्य गणेलाछे तेना मांसना पुरोडाश कर्या हता. माटे जे कालमां व्रीहि यवादि अन्न पुरोडाश करवा जेटलुं पण मळे नहि तेवा

कालमां गोधा कच्छपादिना मांसना पुरोडाश करवा, अने यज्ञ, श्राद्ध, देवार्चन, मधुपर्क, तथा अन्न प्राशनादि शास्त्रमां देखाडेलां स्थलमां ए भक्ष्य पशुनी हिंसा करवाथी दोष नथि एम कह्युंछे. ए उपर लखेलां ठेकाणामांथी मात्र यज्ञने अर्थे जे हिंसा करवी तेने दैव विधि एटले देवने करवा योग्य विधि एम कहेलुंछे, अने बाकीनां श्राद्ध, मधुपर्क. देवार्चनादिमां पशु हिंसा करवी ते आसुर विधि एटले राक्षसने करवानो विधि एम कहेलुं छे, सारांश के सर्व प्रकारे अन्न न मळवाथी मांसना पुरोडाश करवा पडे ते कालमां मात्र यज्ञने अर्थेज हिंसा करे तो तेमां दोष गणातो नथि. एवा कालमां पण अविधिथी करे तो जेटलां पशुना शरीर उपर रुआं होय तेटलां वर्ष पर्यंत ते नरक भोगवे एम स्मृतिओमां कहेलुंछे. व्रीहि यवादि अन्न छतां मांस भक्षण करवुं तेने वृथा मांस भक्षण कहेछे ने ते करनारने पारधी करतां पण अधिक पापी गणेलोछे. एवा आपत्ति कालमां पण जे माणस मांस भक्षण तथा हिंसा करतो नथि तो तेने सो अश्वमेध करवा जेटलुं फल थायछे.

उपर जे अगस्त्यनुं दृष्टांत आपी अन्नाभावकालमां पशु हिंसा तथा मांस भक्षणनो विधि देखाड्यो ते विधिने केवल अन्नाभावकालमां बंगदेशना लोकोज अनुसरेला छे अने गुर्जरादि देशना लोको कोइ काले अनुसरेला नथि तेथी ए विधि गुर्जरादिना लोकोने उपयोगी नथी कारण के धर्म शास्त्रमां घणे ठेकाणे पोताना देशाचार तथा कुलाचार प्रमाणेज चालवुं एवुं कहेलुं छे. आ चतुर्युगनो साधारण धर्म लखेलो छे. कलियुगमां जे विशेष निषेध करेला छे ते पोतानी मेळे वांची लेवा.

सिन्धुसौवीर सौराष्ट्रांस्तथाप्रत्यंतवासिनः ॥
अंगवंगकलिंगांश्चगत्वासंस्कारमर्हति ॥ १ ॥